कदलीकाण्डसदृशौ कदल्या संवृतावुभौ ।
ऊरू पश्यामि ते देवि नासि शक्ता निगूहितुम् ॥

कर्णिकारवनं भद्रे हसन्ती देवि सेवसे ।
अलं ते परिहासेन मम बाधावहेन वै ॥

परिहासेन किं सीते परिश्रान्तस्य मे प्रिये ।
अयं स परिहासोऽपि साधु देवि न रोचते ॥

विशेषेणाश्रमस्थाने हासोऽयं न प्रशस्यते ।
अवगच्छामि ते शीलं परिहासप्रियं प्रिये ॥

आगच्छ त्वं विशालाक्षि शून्योऽयमुटजस्तव ।
सुव्यक्तं राक्षसैः सीता भक्षिता वा हृताऽपि वा ॥

न हि सा विलपन्तं मामुपसंप्रैति लक्ष्मण ।
एतानि मृगयूथानि साश्रुनेत्राणि लक्ष्मण ॥

शंसन्तीव हि वैदेहीं भक्षितां रजनीचरैः ।
हा ममार्ये क्व याताऽसि हा साध्वि वरवर्णिनि ॥

हा सकामा त्वया देवि कैकेयी सा भविष्यति ।
सीतया सह निर्यातो विना सीतामुपागतः ॥

कथं नाम प्रवेक्ष्यामि शून्यमन्तःपुरं पुनः ।
निर्वीर्य इति लोकोयं निर्दयश्चेति वक्ष्यति ॥ १२

कातरत्वं प्रकाशं हि सीतापनयनेन मे ।
निवृत्तवनवासश्च जनकं मिथिलाधिपम् ॥ १३

कुशलं परिपृच्छन्तं कथं शक्ष्ये निरीक्षितुम् ।
विदेहराजो नूनं मां दृष्ट्वा विरहितं तया ॥ १४

दुहितृस्नेहसंतप्तो मोहस्य वशमेष्यति ।
अथ वा न गमिष्यामि पुरीं भरतपालिताम् ॥ १५

स्वर्गोऽपि सीतया हीनः शून्य एव मतो मम ।
मामिहोत्सृज्य हि वने गच्छायोध्यां पुरीं शुभाम् ॥ १६

न त्वहं तां विना सीतां जीवेयं हि कथंचन ।
गाढमाश्लिष्य भरतो वाच्यो मद्वचनात्त्वया ॥ १७

अनुज्ञातोऽसि रामेण पालयेति वसुन्धराम् ।
अम्बा च मम कैकेयी सुमित्रा च त्वया विभो ॥ १८

कौसल्या च यथान्यायमभिवाद्या ममाज्ञया ।
रक्षणीया प्रयत्नेन भवता सूक्तकारिणा ॥ १९

सीतायाश्च विनाशोऽयं मम चामित्रकर्शन ।
विस्तरेण जनन्या मे विनिवेद्यस्त्वया भवेत् ॥ २०

इति विलपति राघवे सुदीने
वनमुपगम्य तया विना सुकेश्या ।
भयविकलमुखस्तु लक्ष्मणोऽपि
व्यथितमना भृशमातुरो बभूव ॥ २१

इति द्विषष्टितमः सर्गः ॥

## त्रिषष्टितमः सर्गः ॥

स राजपुत्रः प्रियया विहीनः
कामेन शोकेन च पीड्यमानः ।
विषादयन्भ्रातरमार्तरूपो
भूयो विषादं प्रविवेश तीव्रम् ॥ १

स लक्ष्मणं शोकवशाभिपन्नं
शोके निमग्नो विपुले तु रामः ।
उवाच वाक्यं व्यसनानुरूप
मुष्णं विनीःश्वस्य रुदन्सशोकम् ॥ २

न मद्विधो दुष्कृतकर्मकारी
मन्ये द्वितीयोऽस्ति वसुन्धरायाम् ।
शोकेन शोको हि परम्पराया
मामेति भिन्दन्हृदयं मनश्च ॥ ३

पूर्वं मया नूनमभीप्सितानि
पापानि कर्माण्यसकृत्कृतानि ।
तत्रायमद्यापतितो विपाको
दुःखेन दुःखं यदहं विशामि ॥ ४

राज्यप्रणाशः स्वजनैर्वियोगः
पितुर्विनाशो जननीवियोगः ।
सर्वाणि मे लक्ष्मण शोकवेग-
मापूरयन्ति प्रविचिन्तितानि ॥ ५

सर्वं तु दुःखं मम लक्ष्मणेदं
शान्तं शरीरे वनमेत्य शून्यम् ।
सीतावियोगात्पुनरप्युदीर्णं
काष्ठैरिवाग्निः सहसा प्रदीप्तः ॥ ६

सा नूनमार्या मम राक्षसेन
बलाद्धृता खं समुपेत्य भीरुः ।

अपस्वरं सस्वरविप्रलापा
भयेन विक्रन्दितवत्यभीक्ष्णम् ॥ ७

तौ लोहितस्य प्रियदर्शनस्य
सदोचितावुत्तमचन्दनस्य ।
वृत्तौ स्तनौ शोणितपङ्कदिग्धौ
नूनं प्रियाया मम नाभिभातः ॥ ८

तच्छ्लक्ष्णसुव्यक्तमृदुप्रलापं
तस्या मुखं कुञ्चितकेशभारम् ।
रक्षोवशं नूनमुपागतायाः
न भ्राजते राहुमुखे यथेन्दुः ॥ ९

तां हारपाशस्य सदोचितायाः
ग्रीवां प्रियाया मम सुव्रतायाः ।
रक्षांसी नूनं परिपीतवन्ति
विभिद्य शून्ये रुधिराशनानि ॥ १०

मया विहीना विजने वने या
रक्षोभिराहृत्य विकृष्यमाणा ।
नूनं विनादं कुररीव दीना
सा मुक्तवत्यायतकान्तनेत्रा ॥ ११

अस्मिन्मया सार्धमुदारशीला
  शिलातले पूर्वमुपोपविष्टा ।
कान्तस्मिता लक्ष्मण जातहासा
  त्वामाह सीता बहुवाक्यजातम् ॥ १२

गोदावरीयं सरितां वरिष्ठा
  प्रिया प्रियाया मम नित्यकालम् ।
अप्यत्र गच्छेदिति चिन्तयामी
  नैकाकिनी याति हि सा कदाचित् ॥ १३

पद्मनना पद्मविशालनेत्रा
  पद्मानि वाऽऽनेतुमभिप्रयाता ।
तदप्ययुक्तं न हि सा कदाचि-
  न्मया विना गच्छति पङ्कजानि ॥ १४

कामं त्विदं पुष्पितवृक्षषण्डं
  नानाविधैः पक्षिगणैरुपेतम् ।
वनं प्रयाता नु तदप्ययुक्त-
  मेकाकिनी साऽतिबिभेति भीरुः ॥ १५

आदित्य भो लोककृताकृतज्ञ
  लोकस्य सत्यानृतकर्मसाक्षिन् ।

मम प्रिया सा क्व गता हृता वा
शंसस्व मे शोकवशस्य सत्यम् ॥ १६

लोकेषु सर्वेषु च नास्ति किंचि-
द्यत्तेन नित्यं विदितं भवेत्तत् ।
शंसस्व वायो कुलशालिनीं तां
हृता मृता वा पथि वर्तते वा ॥ १७

इतीव तं शोकविधेयदेहं
रामं विसंज्ञं विलपन्तमेवम् ।
उवाच सौमित्रिरदीनसत्त्वो
न्याये स्थितः कालयुतं च वाक्यम् ॥ १८

शोकं विमुञ्चार्य धृतिं भजस्व
सोत्साहता चास्तु विमार्गणेऽस्याः ।
उत्साहवन्तो हि नरा न लोके
सीदन्ति कर्मस्वतिदुष्करेषु ॥ १९

इतीव सौमित्रिमुदग्रपौरुषं
ब्रुवन्तमार्तो रघुवंशवर्धनः ।
न चिन्तयामास धृतिं विमुक्तवा-
न्पुनश्च दुःखं महदभ्युपागमत् ॥ २०

इति त्रिषष्टितमः सर्गः ॥

## चतुःषष्टितमः सर्गः ॥

स दीनो दीनया वाचा लक्ष्मणं वाक्यमब्रवीत् ।
शीघ्रं लक्ष्मण जानीहि गत्वा गोदावरीं नदीम् ॥ १

अपि गोदावरीं सीता पद्मान्यानयितुं गता ।
एवमुक्तस्तु रामेण लक्ष्मणः परवीरहा ॥ २

नदीं गोदावरीं रम्यां जगाम लघुविक्रमः ।
तां लक्ष्मणस्तीर्थवतीं विचित्वा राममब्रवीत् ॥ ३

नैनां पश्यामि तीर्थेषु क्रोशतो न शृणोति मे ।
कं नु सा देशमापन्ना वैदेहि क्लेशनाशिनी ॥ ४

न ह्यहं वेद तं देशं यत्र सा जनकात्मजा ।
लक्ष्मणस्य वचः श्रुत्वा दीनः संतापमोहितः ॥ ५

रामः समभिचक्राम स्वयं गोदावरीं नदीम् ।
स तामुपस्थितो रामः क्व सीतेत्येवमब्रवीत् ॥ ६

भूतानी राक्षसेन्द्रेण वधार्हेण हृतामिति ।
न तां शशंसू रामाय तथा गोदावरी नदी ॥ ७

ततः प्रचोदिता भूतैः शंसास्मैत्तां प्रियामिति ।
न तु साऽभ्यवदत्सीतां पृष्टा रामेण शोचता ॥ ८

रावणस्य च तद्रूपं कर्माणि च दुरात्मनः ।
ध्यात्वा भयात्तु वैदेहीं सा नदी न शशंस ताम् ॥ ९

निराशस्तु तया नद्या सीताया दर्शने कृतः ।
उवाच रामः सौमित्रिं सीताऽदर्शनकर्शितः ॥ १०

एषा गोदावरी सौम्य किंचिन्न प्रतिभाषते ।
किं नु लक्ष्मण वक्ष्यामि समेत्य जनकं वचः ॥ ११

मातरं चैव वैदेह्या विना तामहमप्रियम् ।
या मे राज्यविहीनस्य वने वन्येन जीवतः ॥ १२

सर्वं व्यपनयेच्छोकं वैदेही क्व नु सा गता ।
ज्ञातिपक्षविहीनस्य राजपुत्रीमपश्यतः ॥ १३

मन्ये दीर्घा भविष्यन्ति रात्रयो मम जाग्रतः ।
मन्दाकिनीं जनस्थानमिमं प्रस्रवणं गिरिम् ॥ १४

सर्वाण्यनुचरिष्यामि यदि सीता हि दृश्यते ।
एते मृगा महावीर्या मामीक्षन्ते मुहुर्मुहुः ॥ १५

वक्तुकामा इव हि मे इङ्गितान्युपलक्षये ।
तांस्तु दृष्ट्वा नरव्याघ्रो राघवः प्रत्युवाच ह ॥ १६

क्व सीतेति निरीक्षन्वै बाष्पसंरुद्धया दृशा ।
एवमुक्ता नरेन्द्रेण ते मृगाः सहसोत्थिताः ॥ १७

दक्षिणाभिमुखाः सर्वे दर्शयन्तो नभःस्थलम् ।
मैथिली ह्रियमाणा सा दिशं यामन्वपद्यत ॥ १८

तेन मार्गेण धावन्तो निरीक्षन्ते नराधिपम् ।
येन मार्गं च भूमिं च निरीक्षन्ते स्म ते मृगाः ॥ १९

पुनश्च मार्गमिच्छन्ति लक्ष्मणेनोपलक्षिताः ।
तेषां वचनसर्वस्वं लक्षयामास चेङ्गितम् ॥ २०

उवाच लक्ष्मणो ज्येष्ठं धीमान्भ्रातरमार्तवत् ।
क्व सीतेति त्वया पृष्टा यथेमे सहसोत्थिताः ॥ २१

दर्शयन्ति क्षितिं चैव दक्षिणां च दिशं मृगाः ।
साधु गच्छावहे देव दिशमेतां हि नैर्ऋतिम् ॥ २२

यदि स्यादागमः कश्चिदार्या वा साथ लक्ष्यते ।
बाढमित्येव काकुत्स्थः प्रस्थितो दक्षिणां दिशम् ॥ २३

लक्ष्मणानुगतः श्रीमान्वीक्षमाणो वसुन्धराम् ।
एवं संभाषमाणौ तावन्योन्यं भ्रातरावुभौ ॥ २४

वसुन्धरायां पतितं पुष्पमार्गमपश्यताम् ।
तां पुष्पवृष्टिं पतितां दृष्ट्वा रामो महीतले ॥ २५

उवाच लक्ष्मणं वीरो दुःखितो दुःखितं वचः ।
अभिजानामि पुष्पाणि तानीमानीह लक्ष्मण ॥ २६

पिनद्धानीह वैदेह्या मया दत्तानी कानने ।
मन्ये सूर्यश्च वायुश्च मेदिनी च यशस्विनी ॥ २

अभिरक्षन्ति पुष्पाणि प्रकुर्वन्तो मम प्रियम् ।
एवमुक्त्वा महाबाहुं लक्ष्मणं पुरुषर्षभः ॥ २

उवाच रामो धर्मात्मा गिरिं प्रस्रवणाकुलम् ।
कच्चित्क्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ॥ २

रामा रम्ये वनोद्देशे मया विरहिता त्वया ।
क्रुद्धोऽब्रवीद्गिरिं तत्र सिंहः क्षुद्रमृगं यथा ॥ ३

तां हेमवर्णां हेमाभां सीतां दर्शय पर्वत ।
यावत्सानूनि सर्वाणि न ते विध्वंसयाम्यहम् । ३

एवमुक्तस्तु रामेण पर्वतो मैथिलीं प्रति ।
शंसन्निव ततः सीतां नादर्शयत राघवे ॥ ३२

ततो दाशरथी राम उवाच च शिलोच्चयम् ।
मम बाणाग्निनिर्दग्धो भस्मीभूतो भविष्यसि ॥ ३३

असेव्यः संततं चैव निस्तृणद्रुमपल्लवः ।
इमां वा सरितं चाद्य शोषयिष्यामि लक्ष्मण ॥ ३४

यदि नाख्याति मे सीतामार्यां चन्द्रनिभाननाम् ।
एवं स रुषितो रामो दिधक्षन्निव चक्षुषा ॥ ३५

ददर्श भूमौ निष्क्रान्तं राक्षसस्य पदं महत् ।
त्रस्ताया रामकाङ्क्षिण्याः प्रधावन्त्या इतस्ततः ॥ ३६

राक्षसेनानुवृत्ताया मैथिल्याश्च पदान्यथ ।
स समीक्ष्य परिक्रान्तं सीताया राक्षसस्य च ॥ ३७

भग्नं धनुश्च तूणी च विकीर्णं बहुधा रथम् ।
संभ्रान्तहृदयो रामः शशंस भ्रातरं प्रियम् ॥ ३८

पश्य लक्ष्मण वैदेह्याः शीर्णाः कनकबिन्दवः ।
भूषणानां हि सौमित्रे माल्यानि विविधानि च ॥ ३९

तप्तबिन्दुनिकाशैश्च चित्रैः क्षतजबिन्दुभिः ।
आवृतं पश्य सौमित्रे सर्वतो धरणीतलम् ॥ ४

मन्ये लक्ष्मण वैदेही राक्षसैः कामरूपिभिः ।
भित्त्वा भित्त्वा विभक्ता वा भक्षिता वा भविष्यति ॥ ४

तस्या निमित्तं वैदेह्या द्वयोर्विवदमानयोः ।
बभूव युद्धं सौमित्रे घोरं राक्षसयोरिह ॥ ४

मुक्तामणिमयं चेदं तपनीयविभूषितम् ।
धरण्यां पतितं सौम्य कस्य भग्नं महद्धनुः ॥ ४

राक्षसानामिदं वत्स शूराणामथ वापि वा ।
तरुणादित्यसंकाशं वैडूर्यगुलिकाचितम् ॥ ४

विशीर्णं पतितं भूमौ कवचं कस्य काञ्चनम् ।
छत्रं शतशलाकं च दिव्यमाल्योपशोभितम् ॥ ४

भग्नदण्डमिदं कस्य भूमौ सम्यङ्निपातितम् ।
काञ्चनोरश्छदाश्चेमे पिशाचवदनाः खराः ॥ ४

भीमरूपा महाकायाः कस्य वा निहता रणे ।
दीप्तपावकसंकाशो द्युतिमान्समरध्वजः ॥ ४

अपविद्धश्च भग्नश्च कस्य सांग्रामिको रथः ।
रथाक्षमात्रा विशिखास्तपनीयविभूषणाः ॥ ४८

कस्येमेऽभिहता बाणाः प्रकीर्णा घोरकर्मणः ।
शरावरौ शरैः पूर्णौ विध्वस्तौ पश्य लक्ष्मण ॥ ४९

प्रतोदाभीषुहस्तो वै कस्यायं सारथिर्हतः ।
कस्येमौ पुरुषव्याघ्र शयाते निहतो युधि ॥ ५०

चामरग्राहिणौ सौम्य सोष्णीषमणिकुण्डलौ ।
पदवी पुरुषस्यैषा व्यक्तं कस्यापि रक्षसः ॥ ५१

वैरं शतगुणं पश्य ममेदं जीवितान्तकम् ।
सुघोरहृदयैः सौम्य राक्षसैः कामरूपिभिः ॥ ५२

हृता मृता वा सीता सा भक्षिता वा तपस्विनी ।
न धर्मस्त्रायते सीतां ह्रियमाणां महावने ॥ ५३

भक्षितायां हि वैदेह्यां हृतायामपि लक्ष्मण ।
के हि लोकेऽप्रियं कर्तुं शक्ताः सौम्य ममेश्वराः ॥ ५४

कर्तारमपि लोकानां शूरं करुणवेदिनम् ।
अज्ञानादवमन्येरन्सर्वभूतानि लक्ष्मण ॥ ५५

मृदुं लोकहिते युक्तं दान्तं करुणवेदिनम् ।
निर्वीर्य इति मन्यन्ते नूनं मां त्रिदशेश्वराः ॥ ५६

मां प्राप्य हि गुणो दोषः संवृत्तः पश्य लक्ष्मण ।
अद्यैव सर्वभूतानां रक्षसामभवाय च ॥ ५७

संहृत्यैव शशिज्योत्स्नां महान्सूर्य इवोदितः ।
संहृत्यैव गुणान्सर्वान्मम तेजः प्रकाशते ॥ ५८

नैव यक्षा न गन्धर्वा न पिशाचा न राक्षसाः ।
किंनरा वा मनुष्या वा सुखं प्राप्स्यन्ति लक्ष्मण ॥ ५९

ममास्त्रबाणसंपूर्णमाकाशं पश्य लक्ष्मण ।
निःसंपातं करिष्यामि ह्यद्य त्रैलोक्यचारिणाम् ॥ ६०

संनिरुद्धग्रहगणमावारितनिशाकरम् ।
विप्रणष्टानलमरुद्भास्करद्युतिसंवृतम् ॥ ६१

विनिर्मथितशैलाग्रं शुष्यमाणजलाशयम् ।
ध्वस्तद्रुमलतागुल्मं विप्रणाशितसागरम् ॥ ६२

त्रैलोक्यं तु करिष्यामि संयुक्तं कालधर्मणा ।
न तां कुशलिनीं सीतां प्रदास्यन्ति यदीश्वराः ॥ ६३

अस्मिन्मुहूर्ते सौमित्रे मम द्रक्ष्यन्ति विक्रमम् ।
नाकाशमुत्पतिष्यन्ति सर्वभूतानि लक्ष्मण ॥ ६४

मम चापगुणोन्मुक्तैर्बाणजालैर्निरन्तरम् ।
अर्दितं मम नाराचैर्ध्वस्तभ्रान्तमृगद्विजम् ॥ ६५

समाकुलममर्यादं जगत्पश्याद्य लक्ष्मण ।
आकर्णपूर्णैरिषुभिर्जीवलोकं दुरासदैः ॥ ६६

करिष्ये मैथिलीहेतोरपिशाचमराक्षसम् ।
मम रोषप्रयुक्तानां सायकानां बलं सुराः ॥ ६७

द्रक्ष्यन्त्यद्य विमुक्तानामतिदूरातिगामिनाम् ।
नैव देवा न दैतेया न पिशाचा न राक्षसाः ॥ ६८

भविष्यन्ति मम क्रोधात्त्रैलोक्ये विप्रणाशिते ।
देवदानवयक्षाणां लोका ये रक्षसामपि ॥ ६९

बहुधा न भविष्यन्ति बाणौघैः शकलीकृताः ।
निर्मर्यादानिमाँल्लोकान्करिष्याम्यद्य सायकैः ॥ ७०

हृतां मृतां वा सौमित्रे न दास्यन्ति ममेश्वराः ।
तथारूपां हि वैदेहीं न दास्यन्ति यदि प्रियाम् ॥ ७१

नाशयामि जगत्सर्वं त्रैलोक्यं सचराचरम् ।
इत्युक्त्वा रोषताम्राक्षो रामो निष्पीड्य कार्मुकम् ॥ ७२

शरमादाय संदीप्तं घोरमाशीविषोपमम् ।
संधत्ते धनुषि श्रीमान्रामः परपुरंजयः ॥ ७३

युगान्ताग्निरिव क्रुद्ध इदं वचनमब्रवीत् ।
यथा जरा यथा मृत्युर्यथा कालो यथा विधिः ॥ ७४

नित्यं न प्रतिहन्यन्ते सर्वभूतेषु लक्ष्मण ।
तथाहं क्रोधसंयुक्तो न निवार्योऽस्मि सर्वथा ॥ ७५

पुरेव मे चारुदतीमनिन्दितां
दिशन्ति सीतां यदि नाद्य मैथिलीम् ।
सदेवगन्धर्वमनुष्यपन्नगं
जगत्सशैलं परिवर्तयाम्यहम् ॥ ७६

इति चतुःषष्टितमः सर्गः ॥

## पञ्चषष्टितमः सर्गः ॥

तप्यमानं तथा रामं सीताहरणकर्शितम् ।
लोकानामभवे युक्तं संवर्तकमिवानलम् ॥ १

वीक्षमाणं धनुः सज्यं निश्वसन्तं पुनः पुनः ।
हन्तुकामं पशुं रुद्रं क्रुद्धं दक्षक्रतौ यथा ।
दग्धुकामं जगत्सर्वं युगान्ते तु यथा हरम् ॥ २

अदृष्टपूर्वं संक्रुद्धं दृष्ट्वा रामं तु लक्ष्मणः ।
अब्रवीत्प्राञ्जलिर्वाक्यं मुखेन परिशुष्यता ॥ ३

पुरा भूत्वा मृदुर्दान्तः सर्वभूतहिते रतः ।
न क्रोधवशमापन्नः प्रकृतिं हातुमर्हसि ।' ४

चन्द्रे लक्ष्मीः प्रभा सूर्ये गतिर्वायौ भुवि क्षमा ।
एतच्च नियतं सर्वं त्वयि चानुत्तमं यशः ॥ ५

एकस्य नापराधेन लोकान्हन्तुं त्वमर्हसि ।
अन्यद्गदामिराजेन्द्र निदानं सर्वसम्पदाम् ॥ ६

धर्मे जयति नाधर्मः कदाचिदपिचोभयोः ।
सीता पतिव्रता लक्ष्मीर्न नाशं वै गमिष्यति ।
न तु जानामि कस्यायं भग्नः सांग्रामिको रथः ॥ ७

केन वा कस्य वा हेतोः सायुधः सपरिच्छदः ।
खुरनेमिक्षतश्चायं सिक्तो रुधिरबिन्दुभिः ॥ ८

देशो निर्वृत्तसंग्रामः सुघोरः पार्थिवात्मज ।
एकस्य तु विमर्दोयं न द्वयोर्वदतां वर ॥ ९

न हि वृत्तं हि पश्यामि बलस्य महतः पदम् ।
नैकस्य तु कृते लोकान्विनाशयितुमर्हसि ॥ १०

युक्तदण्डा हि मृदवः प्रशान्ता वसुधाधिपाः ।
सदा त्वं सर्वभूतानां शरण्यः परमा गतिः ॥ ११

को नु दारप्रणाशं ते साधु मन्येत राघव ।
सरितः सागराः शैला देवगन्धर्वदानवाः ॥ १२

नालं ते विप्रियं कर्तुं दीक्षितस्येव साधवः ।
येन राजन्हृता सीता तमन्वेषितुमर्हसि ॥ १३

मद्वितीयो धनुष्पाणिः सहायैः परमर्षिभिः ।
समुद्रं च विचेष्यामः पर्वतांश्च वनानि च ॥ १४

गुहाश्च विविधा घोरा नदीः पद्मवनानि च ।
देवगन्धर्वलोकांश्च विचेष्यामः समाहिताः ॥ १५

यावन्नाधिगमिष्यामस्तव भार्यापहारिणम् ।
न चेत्साम्ना प्रदास्यन्ति पत्नीं ते त्रिदशेश्वराः ।
कोसलेन्द्र ततः पश्चात्प्राप्तकालं करिष्यसि ॥ १६

शीलेन साम्ना विनयेन सीतां
नयेन न प्राप्स्यसि चेन्नरेन्द्र ।
ततः समुत्पाटय हेमपुङ्खै-
र्महेन्द्रवज्रप्रतिमैः शरोघैः ॥ १७

इति पञ्चषष्टितमः सर्गः ॥

## षट्षष्टितमः सर्गः ॥

तं तथा शोकसंतप्तं विलपन्तमनाथवत् ।
मोहेन महताऽऽविष्टं परिद्यूनमचेतनम् ॥ १

ततः सौमित्रिराश्वास्य मुहूर्तादिव लक्ष्मणः ।
रामं संबोधयामास चरणौ चाभिपीडयन् ॥ २

महता तपसा राम महता चापि कर्मणा ।
राज्ञा दशरथेनाऽसि लब्धोऽमृतमिवामरैः ॥ ३

तव चैव गुणैर्बद्धस्त्वद्वियोगान्महीपतिः ।
राजा देवत्वमापन्नो भरतस्य यथा श्रुतम् ॥ ४

यदि दुःखमिदं प्राप्तं काकुत्स्थ न सहिष्यसे ।
प्राकृतश्चाल्पसत्त्वश्च इतरः कः सहिष्यति ॥ ५

दुःखितो हि भवाँल्लोकांस्तेजसा यदि धक्ष्यसे ।
आर्ताः प्रजा नरव्याघ्र क्व नु यास्यन्ति निर्वृतिम् ॥ ६

लोकस्वभाव एवैष ययातिर्नहुषात्मजः ।
गतः शक्रेण सालोक्यमनयस्तं तमः स्पृशत् ॥ ७

महर्षियों वसिष्ठस्तु यः पितुर्नः पुरोहितः ।
अह्ना पुत्रशतं जज्ञे तथैवास्य पुनर्हतम् ॥ ८

या चेयं जगतां माता देवी लोकनमस्कृता ।
अस्याश्च चलनं भूमेर्दृश्यते सत्यसंश्रय ॥ ९

यौ धर्मौ जगतां नेत्रौ यत्र सर्वं प्रतिष्ठितम् ।
आदित्यचन्द्रौ ग्रहणमभ्युपेतौ महाबलौ ॥ १०

सुमहान्त्यपि भूतानि देवाश्च पुरुषर्षभ ।
न दैवस्य प्रमुञ्चन्ति सर्वभूतादिदेहिनः ॥ ११

शक्रादिष्वपि देवेषु वर्तमानौ नयानयौ ।
श्रूयेते नरशार्दूल न त्वं शोचितुमर्हसि ॥ १२

नष्टायामपि वैदेह्यां हृतायामपि चानघ ।
शोचितुं नार्हसे वीर यथान्यः प्राकृतस्तथा ॥ १३

त्वद्विधा न हि शोचन्ति सततं सत्यदर्शिनाः ।
सुमहत्स्वपि कृच्छ्रेषु रामानिर्विण्णदर्शनाः ॥ १४

तत्त्वतो हि नरश्रेष्ठ बुद्ध्या समनुचिन्तय ।
बुद्ध्या युक्ता महाप्राज्ञा विजानन्ति शुभाशुभे ॥ १५

अदृष्टगुणदोषाणामधृतानां च कर्मणाम् ।
नान्तरेण क्रियां तेषां फलमिष्टं प्रवर्तते ॥ १६

त्वमेव हि पुरा राम मामेवं बहुशोऽन्वशाः ।
अनुशिष्याद्धि को नु त्वामपि साक्षाद्बृहस्पतिः ॥ १७

बुद्धिश्च ते महाप्राज्ञ देवैरपि दुरन्वया ।
शोकेनाभिप्रसुप्तं ते ज्ञानं संबोधयाम्यहम् ॥ १८

दिव्यं च मानुषं च त्वमात्मनश्च पराक्रमम् ।
इक्ष्वाकुवृषभावेक्ष्य यतस्व द्विषतां वधे ॥ १९

किं ते सर्वविनाशेन कृतेन पुरुषर्षभ ।
तमेव त्वं रिपुं पापं विज्ञायोद्धर्तुमर्हसि ॥ २०

इति षट्षष्टितमः सर्गः ॥

## सप्तषष्टितमः सर्गः ॥

पूर्वजोऽप्युक्तमात्रस्तु लक्ष्मणेन सुभाषितम् ।
सारग्राही महासारं प्रतिजग्राह राघवः ॥ १

संनिगृह्य महाबाहुः प्रवृत्तं कोपमात्मनः ।
अवष्टभ्य धनुश्चित्रं रामो लक्ष्मणमब्रवीत् ॥ २

किं करिष्यावहे वत्स क्व वा गच्छाव लक्ष्मण ।
केनोपायेन पश्येयं सीतामिति विचिन्तय ॥ ३

तं तथा परितापार्तं लक्ष्मणो राममब्रवीत् ।
इदमेव जनस्थानं त्वमन्वेषितुमर्हसि ॥ ४

राक्षसैर्बहुभिः कीर्णं नानाद्रुमलतायुतम् ।
सन्तीह गिरिदुर्गाणि निर्दराः कंदराणि च ॥ ५

गुहाश्च विविधा घोरा नानामृगगणाकुलाः ।
आवासाः किंनराणां च गन्धर्वभवनानि च ॥ ६

तानि युक्तो मया सार्धं त्वमन्वेषितुमर्हसि ।
त्वद्विधा बुद्धिसंपन्ना महात्मानो नरर्षभ ॥ ७

आपत्सु न प्रकम्पन्ते वायुवेगैरिवाचलाः ।
इत्युक्तस्तद्वनं सर्वं विचचार सलक्ष्मणः ॥ ८

क्रुद्धो रामः शरं घोरं संधाय धनुषि क्षुरम् ।
ततः पर्वतकूटाभं महाभागं द्विजोत्तमम् ॥ ९

ददर्श पतितं भूमौ क्षतजार्द्रं जटायुषम् ।
तं दृष्ट्वा गिरिशृङ्गाभं रामो लक्ष्मणमब्रवीत् ॥ १०

अनेन सीता वैदेही भक्षिता नात्र संशयः ।
गृध्ररूपमिदं रक्षो व्यक्तं भवति कानने ॥ ११

भक्षयित्वा विशालाक्षीमास्ते सीतां यथासुखम् ।
एनं वधिष्ये दीप्तास्यैर्घोरैर्बाणैरजिह्मगैः ॥ १२

इत्युक्त्वाभ्यपतद्गृध्रं सन्धाय धनुषि क्षुरम् ।
क्रुद्धो रामः समुद्रान्तां कम्पयन्निव मेदिनीम् ॥ १३

तं दीनं दीनया वाचा सफेनं रुधिरं वमन् ।
अभ्यभाषत पक्षी तु रामं दशरथात्मजम् ॥ १४

यामोषधिमिवायुष्मन्नन्वेषसि महावने ।
सा देवी मम च प्राणा रावणेनोभयं हृतम् ॥ १५

त्वया विरहिता देवी लक्ष्मणेन च राघव ।
ह्रियमाणा मया दृष्टा रावणेन बलीयसा ॥ १६

सीतामभ्यवपन्नोऽहं रावणश्च रणे मया ।
विध्वंसितरथश्चात्रः पतितो धरणीतले ॥ १७

एतदस्य धनुर्भग्नमेतदस्य शरावरम् ।
अयमस्य रथो राम भग्नः सांग्रामिको मया ॥ १८

अयं तु सारथिस्तस्य मत्पक्षो निहतो युधि ।
परिश्रान्तस्य मे पक्षौ छित्वा खड्गेन रावणः ॥ १९

सीतामादाय वैदेहीमुत्पपात विहायसम् ।
रक्षसा निहतं पूर्वं न मां हन्तुं त्वमर्हसि ॥ २०

रामस्तस्य तु विज्ञाय बाष्पपूर्णमुखस्तदा ।
द्विगुणीकृततापार्तः सीतासक्तां प्रियां कथाम् ॥ २१

गृध्रराजं परिष्वज्य परित्यज्य महद्धनुः ।
निपपातावशो भूमौ रुरोद सहलक्ष्मणः ॥ २२

एकमेकायने दुर्गे निःश्वसन्तं कथञ्चन ।
समीक्ष्य दुःखिततरो रामः सौमित्रिमब्रवीत् ॥ २३

राज्याद्भ्रंशो वने वासः सीता नष्टा द्विजो हतः ।
ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम् ॥ २४

संपूर्णमपि चेदद्य प्रतरेयं महोदधिम् ।
सोऽपि नूनं ममालक्ष्म्या विशुष्येत्सरितां पतिः ॥ २५

नास्त्यभाग्यतरो लोके मत्तोऽस्मिन्सचराचरे ।
येनेयं महती प्राप्ता मया व्यसनवागुरा ॥ २६

अयं पितृवयस्यो मे गृध्रराजो जरान्वितः ।
शेते विनिहतो भूमौ मम भाग्यविपर्ययात् ॥ २७

इत्येवमुक्त्वा बहुशो राघवः सहलक्ष्मणः ।
जटायुषं च पस्पर्श पितृस्नेहं विदर्शयन् ॥ २८

निकृत्तपक्षं रुधिरावसिक्तं
स गृध्रराजं परिरभ्य रामः ।
क्व मैथिली प्राणसमा ममेति
विमुच्य वाचं निपपात भूमौ ॥ २९

इति सप्तषष्टितमः सर्गः ॥

# अष्टषष्टितमः सर्गः ॥

रामः संप्रेक्ष्य तं गृध्रं भुवि रौद्रेण पातितम् ।
सौमित्रिं मित्रसंपन्नमिदं वचनमब्रवीत् ॥ १

ममायं नूनमर्थेषु यतमानो विहंगमः ।
राक्षसेन हतः संख्ये प्राणांस्त्यक्ष्यति दुस्त्यजान् ॥ २

अयमस्य शरीरेऽस्मिन्प्राणो लक्ष्मण विद्यते ।
तथा हि स्वरहीनोऽयं विक्लवः समुदीक्षते ॥ ३

जटायो यदि शक्नोषि वाक्यं व्याहरितुं पुनः ।
सीतामाख्याहि भद्रं ते वधमाख्याहि चात्मनः ॥ ४

किंनिमित्तोऽहरत्सीतां रावणस्तस्य किं मया ।
अपराधं तु यं दृष्ट्वा रावणेन हृता प्रिया ॥ ५

कथं तच्चन्द्रसंकाशं मुखमासीन्मनोहरम् ।
सीतया कानि चोक्तानी तस्मिन्काले द्विजोत्तम ॥

कथंवीर्यः कथंरूपः किंकर्मा स च राक्षसः ।
क चास्य भवनं तात ब्रूहि मे परिपृच्छतः ॥

तमुद्वीक्ष्याथ दीनात्मा विलपन्तमनन्तरम् ।
वाचाऽतिसन्नया रामं जटायुरिदमब्रवीत् ॥ ८

हृता सा राक्षसेन्द्रेण रावणेन विहायसा ।
मायामास्थाय विपुलां वातदुर्दिनसंकुलाम् ॥ ९

परिश्रान्तस्य मे तात पक्षौ छित्वा स राक्षसः ।
सीतामादाय वैदेहीं प्रयातो दक्षिणां दिशम् ॥ १०

उपरुध्यन्ति मे प्राणा दृष्टिर्भ्रमति राघव ।
पश्यामि वृक्षान्सौवर्णानुशीरकृतमूर्धजान् ॥ ११

येन याति मुहूर्तेन सीतामादाय रावणः ।
विप्रणष्टं धनं क्षिप्रं तत्स्वामी प्रतिपद्यते ॥ १२

विन्दो नाम मुहूर्तोऽयं स च काकुत्स्थ नाबुधत् ।
त्वत्प्रियां जानकीं हृत्वा रावणो राक्षसेश्वरः ॥ १३

झषवद्बडिशं गृह्य क्षिप्रमेव विनश्यति ।
न च त्वया व्यथा कार्या जनकस्य सुतां प्रति ॥ १४

वैदेह्यां रंस्यसे क्षिप्रं हत्वा तं राक्षसं रणे ।
असंमूढस्य गृध्रस्य रामं प्रत्यनुभाषतः ॥ १५

आस्यात्सुस्राव रुधिरं म्रियमाणस्य सामिषम् ।
पुत्रो विश्रवसः साक्षाद्भ्राता वैश्रवणस्य च ॥ १६

इत्युक्त्वा दुर्लभान्प्राणान्मुमोच पतगेश्वरः ।
ब्रूहि ब्रूहीति रामस्य ब्रुवाणस्य कृताञ्जलेः ॥ १७

त्यक्त्वा शरीरं गृध्रस्य जग्मुः प्राणा विहायसम् ।
स निक्षिप्य शिरो भूमौ प्रसार्य चरणौ तदा ॥ १८

विक्षिप्य च शरीरं स्वं पपात धरणीतले ।
तं गृध्रं प्रेक्ष्य ताम्राक्षं गतासुमचलोपमम् ॥ १९

रामः सुबहुभिर्दुःखैर्दीनः सौमित्रिमब्रवीत् ।
बहूनि रक्षसां वासे वर्षाणि वसता सुखम् ॥ २०

अनेन दण्डकारण्ये विशीर्णमिह पक्षिणा ।
अनेकवार्षिको यस्तु चिरकालसमुत्थितः ॥ २१

सोऽयमद्य हतः शेते कालो हि दुरतिक्रमः ।
पश्य लक्ष्मण गृध्रोऽयमुपकारी हतश्च मे । २२

सीतामभ्यवपन्नो वै रावणेन बलीयसा ।
गृध्रराज्यं परित्यज्य पितृपैतामहं महत् ॥ २३

मम हेतोरयं प्राणान्मुमोच पतगेश्वरः ।
सर्वत्र खलु दृश्यन्ते साधवो धर्मचारिणः ॥ २४

शूराः शरण्याः सौमित्रे तिर्यग्योनिगतेष्वपि ।
सीताहरणजं दुःखं न मे सौम्य तथागतम् ॥ २५

यथा विनाशो गृध्रस्य मत्कृते च परंतप ।
राजा दशरथः श्रीमान्यथा मम महायशाः ॥ २६

पूजनीयश्च मान्यश्च तथाऽयं पतगेश्वरः ।
सौमित्रे हर काष्ठानि निर्मथिष्यामि पावकम् ॥ २७

गृध्रराजं हि धक्ष्यामि मत्कृते निधनं गतम् ।
देहं पतगराजस्य चितामारोप्य राघव ॥ २८

इमं धक्ष्यामि सौमित्रे हतं रौद्रेण रक्षसा ।
गोदावर्यास्तटे शुभ्रे चितां कुरुमहाभुज ॥ २९

एवमुक्त्वा तु सौमित्रिं समालक्ष्य जटायुषम् ।
समुद्धृत्य गतिःश्रीमान् गोदावर्यास्तटंप्रति ॥ ३०

ततो गत्वा तु तत्तीरे शुभ्रे कुशसमन्विते ।
अवतीर्याथ निक्षिप्यमथित्वाऽग्निं महायशाः ॥ ३१

लक्ष्मणेनाहृतैः काष्ठैश्चितां कृत्वा महाभुजः ।
या गतिर्यज्ञशीलानामाहिताग्नेश्च या गतिः ॥ ३२

अपरावर्तिनां या च या च भूमिप्रदायिनाम् ।
मया त्वं समनुज्ञातो गच्छ लोकाननुत्तमान् ॥ ३३

गृध्रराज महासत्व संस्कृतश्च मया व्रज ।
एवमुक्त्वा चितां दीप्तामारोप्य पतगेश्वरम् ॥ ३४

ददाह रामो धर्मात्मा स्वबन्धुमिव दुःखितः ।
रामोऽथ सहसौमित्रिर्वनं गत्वा स वीर्यवान् ॥ ३५

स्थूलान्हत्वा महारोहीननु तस्तार तं द्विजम् ।
रोहिमांसानि चोत्कृत्य पेशीकृत्य महायशाः ॥ ३६

शकुनीनां ददौ रामो रम्ये हरितशाद्वले ।
यत्तत्प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः ॥ ३७

तत्स्वर्गगमनं तस्य पित्र्यं रामो जजाप ह ।
ततो गोदावरीं गत्वा नदीं नरवरात्मजौ ॥ ३८

शास्त्रदृष्टेन विधिना जले गृध्राय राघवौ ।
स्नात्वा तौ गृध्रराजाय उदकं चक्रतुस्तदा ॥ ३९

स गृध्रराजः कृतवान्यशस्करं
सुदुष्करं कर्म रणे निपातितः ।
महर्षिकल्पेन च संस्कृतस्तदा
जगाम पुण्यां गतिमात्मनः शुभाम् ॥ ४०

कृतोदकौ तावपि पक्षिसत्तमे
स्थिरां च बुद्धिं प्रणिधाय जग्मतुः ।
प्रवेश्य सीताधिगमे ततो मनो
वनं सुरेन्द्राविव विष्णुवासवौ ॥ ४१

इति अष्टषष्टितमः सर्गः ॥

## एकोनसप्ततितमः सर्गः ॥

कृत्वैवमुदकं तस्मै प्रस्थितौ रामलक्ष्मणौ ।
अवेक्षन्तौ वने सीतां पश्चिमां जग्मतुर्दिशम् ॥ १

तौ दिशं दक्षिणां गत्वा शरचापासिधारिणौ ।
अविप्रहतमैक्ष्वाकौ पन्थानं प्रतिजग्मतुः ॥ २

गुल्मैर्वृक्षैश्च बहुभिर्लताभिश्च प्रवेष्टितम् ।
आवृतं सर्वतो दुर्गं गहनं घोरदर्शनम् ॥ ३

व्यतिक्रम्य तु वेगेन व्यालसिंहनिषेवितम् ।
सुभीमं तन्महारण्यं व्यतियातौ महाबलौ ॥ ४

ततः परं जनस्थानात्त्रिक्रोशं गम्य राघवौ ।
क्रौञ्चारण्यं विविशतुर्गहनं तौ महौजसौ ॥ ५

नानामेघघनप्रख्यं प्रहृष्टमिव सर्वतः ।
नानापक्षिगणैर्जुष्टं नानाव्यालमृगैर्युतम् ॥ ६

दिदृक्षमाणौ वैदेहीं तद्वनं तौ विचिक्यतुः ।
तत्र तत्रावतिष्ठन्तौ सीताहरणकर्शितौ ॥ ७

ततः पूर्वेण तौ गत्वा त्रिक्रोशं भ्रातरौ तदा ।
क्रौञ्चारण्यमतिक्रम्य मतङ्गाश्रममन्तरे ॥ ८

दृष्ट्वा तु तद्वनं घोरं बहुभीममृगद्विजम् ।
नानासत्वसमाकीर्णं सर्वं गहनपादपम् ॥ ९

ददृशाते तु तौ तत्र दरीं दशरथात्मजौ ।
पातालसमगम्भीरां तमसा नित्यसंवृताम् ॥ १०

आसाद्य तौ नरव्याघ्रौ दर्यास्तस्या विदूरतः ।
ददृशाते महारूपां राक्षसीं विकृताननाम् ॥ ११

भयदामल्पसत्त्वानां बीभत्सां रौद्रदर्शनाम् ।
लम्बोदरीं तीक्ष्णदंष्ट्रां करालां परुषत्वचम् ॥ १२

भक्षयन्तीं मृगान्भीमान्विकटां मुक्तमूर्धजाम् ।
प्रैक्षेतां तौ तदा तत्र भ्रातरौ रामलक्ष्मणौ ॥ १३

सा समासाद्य तौ वीरौ व्रजन्तं भ्रातुरग्रतः ।
एहि रंस्यावहेत्युक्त्वा समालम्बत लक्ष्मणम् ॥ १४

उवाच चैनं वचनं सौमित्रिमुपगुह्य सा ।
अहं त्वयोमुखी नाम लाभस्ते त्वमसि प्रियः ॥ १५

नाथ पर्वतकूटेषु नदीनां पुलिनेषु च ।
आयुःशेषमिमं वीर त्वं मया सह रंस्यसे ॥ १६

एवमुक्तस्तु कुपितः खड्गमुद्धृत्य लक्ष्मणः ।
कर्णनासौ स्तनौ चास्या विचकर्तारिसूदनः ॥ १७

कर्णनासे निकृत्ते तु विस्वरं सा विनद्य च ।
यथागतं प्रदुद्राव राक्षसी भीमदर्शना ॥ १८

तस्यां गतायां गहनं व्रजन्तौ वनमोजसा ।
आसेदतुरमित्रघ्नौ भ्रातरौ रामलक्ष्मणौ ॥ १९

लक्ष्मणस्तु महातेजाः सत्ववाञ्शीलवाञ्शुचिः ।
अब्रवीत्प्राञ्जलिर्वाक्यं भ्रातरं दीप्ततेजसम् ॥ २०

स्पन्दते मे दृढं बाहुरुद्विग्नमिव मे मनः ।
प्रायशश्चाप्यनिष्टानि निमित्तान्युपलक्षये ॥ २१

तस्मात्सज्जीभवार्य त्वं कुरुष्व वचनं हितम् ।
ममैव हि निमित्तानि सद्यः शंसन्ति संभ्रमम् ॥ २२

एष वञ्चुलको नाम पक्षी परमदारुणः ।
आवयोर्विजयं युद्धे शंसन्निव विनर्दति ॥ २३

तयोरन्वेषतोरेवं सर्वं तद्वनमोजसा ।
सञ्जज्ञे विपुलः शब्दः प्रभञ्जन्निव तद्वनम् ॥ २४

संवेष्टितमिवात्यर्थं गगनं मातरिश्वना ।
वनस्य तस्य शब्दोऽभूद्दिवमापूरयन्निव ॥ २५

तं शब्दं काङ्क्षमाणस्तु रामः कक्षे सहानुजः ।
ददर्श सुमहाकायं राक्षसं विपुलोरसम् ॥ २६

आसेदतुस्ततस्तत्र तावुभौ प्रमुखे स्थितम् ।
विवृद्धमशिरोग्रीवं कबन्धमुदरेमुखम् ॥ २७

रोमभिर्निचितैस्तीक्ष्णैर्महागिरिमिवोच्छ्रितम् ।
नीलमेघनिभं रौद्रं मेघस्तनितनिःस्वनम् ॥ २८

अग्निज्वालानिकाशेन ललाटस्थेन दीप्यता ।
महापक्ष्मेण पिङ्गेन विपुलेनायतेन च ॥ २९

एकेनोरसि घोरेण नयनेनाशुदर्शिना ।
महादंष्ट्रोपपन्नं तं लेलिहानं महामुखम् ॥ ३०

भक्षयन्तं महाघोरानृक्षसिंहमृगद्विपान् ।
घोरौ भुजौ विकुर्वाणमुभौ योजनमायतौ ॥ ३१

कराभ्यां विविधान्गृह्य ऋक्षान्पक्षिगणान्मृगान् ।
आकर्षन्तं विकर्षन्तमनेकान्मृगयूथपान् ॥ ३२

स्थितमावृत्य पन्थानं तयोर्भ्रात्रोः प्रपन्नयोः ।
अथ तौ समभिक्रम्य क्रोशमात्रे ददर्शतुः ॥ ३३

महान्तं दारुणं भीमं कबन्धं भुजसंवृतम् ।
कबन्धमिव संस्थानादतिघोरप्रदर्शनम् ॥ ३४

स महाबाहुरत्यर्थं प्रसार्य विपुलौ भुजौ ।
जग्राह सहितावेव राघवौ पीडयन्बलात् ॥ ३५

खड्गिनौ दृढधन्वानौ तिग्मतेजोवपुर्धरौ ।
भ्रातरौ विवशं प्राप्तौ कृष्यमाणौ महाबलौ ॥ ३६

तत्र धैर्येण शूरस्तु राघवो नैव विव्यथे ।
बाल्यादनाश्रयत्वाच्च लक्ष्मणस्त्वतिविव्यथे ॥ ३७

उवाच च विषण्णः सन्राघवं राघवानुजः ।
पश्य मां वीर विवशं राक्षसस्य वशं गतम् ॥ ३८

मयैकेन विनिर्युक्तः परिमुञ्चस्व राघव ।
मां हि भूतबलिं दत्वा पलायस्व यथासुखम् ॥ ३९

अधिगन्तासि वैदेहीमचिरेणेति मे मतिः ।
प्रतिलभ्य च काकुत्स्थ पितृपैतामहीं महीम् ॥ ४०

तत्र मां राम राज्यस्थः स्मर्तुमर्हसि सर्वदा ।
लक्ष्मणेनैवमुक्तस्तु रामः सौमित्रिमब्रवीत् ॥ ४१

मा स्म त्रासं कृथा वीर न हि त्वादृग्विषीदति ।
एतस्मिन्नन्तरे क्रूरो भ्रातरौ रामलक्ष्मणौ ॥ ४२

पप्रच्छ घननिर्घोषः कबन्धो दानवोत्तमः ।
कौ युवां वृषभस्कन्धौ महाखड्गधनुर्धरौ ॥ ४३

घोरं देशमिमं प्राप्तौ मम भक्षावुपस्थितौ ।
यद्गतं कार्यमिह वां किमर्थं चागतौ युवाम् ॥ ४४

इमं देशमनुप्राप्तौ क्षुधार्तस्येह तिष्ठतः ।
सबाणचापखड्गौ च तीक्ष्णशृङ्गाविवर्षभौ ॥ ४५

ममास्यमनुसंप्राप्तौ दुर्लभं जीवितं पुनः ।
तस्य तद्वचनं श्रुत्वा कबन्धस्य दुरात्मनः ॥ ४६

उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ।
कृच्छ्रात्कृच्छ्रतरं प्राप्य दारुणं सत्यविक्रम ॥ ४७

व्यसनं जीवितान्ताय प्राप्तमप्राप्य तां प्रियाम् ।
कालस्य सुमहद्वीर्यं सर्वभूतेषु लक्ष्मण ॥ ४८

त्वां च मां च नरव्याघ्र व्यसनैः पश्य मोहितौ ।
नातिभारोऽस्ति दैवस्य सर्वभूतेषु लक्ष्मण ॥ ४९

शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे ।
कालाभिपन्नाः सीदन्ति यथा वालुकसेतवः ॥ ५०

इति ब्रुवाणो दृढसत्यविक्रमो
महायशा दाशरथिः प्रतापवान् ।

अवेक्ष्य सौमित्रिमुदग्रपौरुषं
स्थिरां तदा स्वां मतिमात्मनाऽकरोत् ॥ ५

इति एकोनसप्ततितमः सर्गः ॥

## सप्ततितमः सर्गः ॥

तौ तु तत्र स्थितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
बाहुपाशपरिक्षिप्तौ कबन्धो वाक्यमब्रवीत् ॥ १

तिष्ठतः किं नु मां दृष्ट्वा क्षुधार्तं क्षत्रियर्षभौ ।
आहारार्थं तु संदिष्टौ दैवेन गतचेतसौ ॥ २

तच्छ्रुत्वा लक्ष्मणो वाक्यं प्राप्तकालं हितं तदा ।
उवाचार्तिं समापन्नो विक्रमे कृतनिश्चयः ॥ ३

त्वां च मां च पुरा तूर्णमादत्ते राक्षसाधमः ।
तस्मादसिभ्यामस्याशु बाहू छिन्दावहै गुरू ॥ ४

भीषणोऽयं महाकायो राक्षसो भुजविक्रमः ।
लोकं ह्यतिजितं कृत्वा ह्यावां हन्तुमिहेच्छति ॥ ५

निश्चेष्टानां वधो राजन्कुत्सितो जगतीपते ।
क्रतुमध्योपनीतानां पशूनामिव राघव ॥ ६

एतत्सञ्जल्पितं श्रुत्वा तयोः क्रुद्धस्तु राक्षसः ।
विदार्यास्यं तदा रौद्रस्तौ भक्षयितुमारभत् ॥ ७

ततस्तौ देशकालज्ञौ खड्गाभ्यामेव राघवौ ।
अच्छिन्दतां सुसंहृष्टौ बाहू तस्यांसदेशयोः ॥ ८

दक्षिणो दक्षिणं बाहुमसक्तमसिना ततः ।
चिच्छेद रामो वेगेन सव्यं वीरस्तु लक्ष्मणः ॥ ९

स पपात महाबाहुश्छिन्नबाहुर्महास्वनः ।
खं च गां च दिशश्चैव नादयञ्जलदो यथा ॥ १०

स निकृत्तौ भुजौ दृष्ट्वा शोणितौघपरिप्लुतः ।
दीनः पप्रच्छ तौ वीरौ कौ युवामिति दानवः ॥ ११

इति तस्य ब्रुवाणस्य लक्ष्मणः शुभलक्षणः ।
शशंस राघवं तस्य कबन्धस्य महाबलः ॥ १२

अयमिक्ष्वाकुदायादो रामो नाम जनैः श्रुतः ।
अस्यैवावरजं विद्धि भ्रातरं मां च लक्ष्मणम् ॥ १३

मात्रा प्रतिहृते राज्ये रामः प्रव्राजितो वनम् ।
मया सह चरत्येषः भार्यया च महद्वनम् ॥ १४

अस्य देवप्रभावस्य वसतो विजने वने ।
रक्षसापहृता पत्नी यामिच्छन्ताविहागतौ ॥ १५

त्वं तु को वा किमर्थं वा कबन्धसदृशो वने ।
आस्येनोरसि दीप्तेन भग्नजङ्घो विचेष्टसे ॥ १६

एवमुक्तः कबन्धस्तु लक्ष्मणेनोत्तरं वचः ।
उवाच परमप्रीतस्तदिन्द्रवचनं स्मरन् ॥ १७

स्वागतं वां नरव्याघ्रौ दिष्ट्या पश्यामि चाप्यहम् ।
दिष्ट्या चेमौ निकृत्तौ मे युवाभ्यां बाहुबन्धनौ ॥ १८

विरूपं यच्च मे रूपं प्राप्तं ह्यविनयाद्यथा ।
तन्मे शृणु नरव्याघ्र तत्त्वतः शंसतस्तव ॥ १९

इति सप्ततितमः सर्गः ॥

## एकसप्ततितमः सर्गः ॥

पुरा राम महाबाहो महाबलपराक्रम ।
रूपमासीन्ममाचिन्त्यं त्रिषु लोकेषु विश्रुतम् ॥ १

यथा सोमस्य शक्रस्य सूर्यस्य च यथा वपुः ।
सोऽहं रूपमिदं कृत्वा लोकवित्रासनं महत् ॥ २

ऋषीन्वनगतान्राम त्रासयामि ततस्ततः ।
ततः स्थूलशिरा नाम महर्षिः कोपितो मया ॥ ३

सञ्चिन्वन्विविधं वन्यं रूपेणानेन धर्षितः ।
तेनाहमुक्तः प्रेक्ष्यैवं घोरशापाभिधायिना ॥ ४

एतदेव नृशंसं ते रूपमस्तु विगर्हितम् ।
स मया याचितः क्रुद्धः शापस्यान्तो भवेदिति ॥ ५

अभिशापकृतस्येति तेनेदं भाषितं वचः ।
यदा छित्वा भुजौ रामस्त्वां दहेद्विजने वने ॥ ६

तदा त्वं प्राप्स्यसे रूपं स्वमेव विपुलं शुभम् ।
श्रिया विराजितं पुत्रं दनोस्त्वं विद्धि लक्ष्मण ॥ ७

इन्द्रकोपादिदं रूपं प्राप्तमेवं रणाजिरे ।
अहं हि तपसोग्रेण पितामहमतोषयम् ॥ ८

दीर्घमायुः स मे प्रादात्ततो मां विभ्रमोऽस्पृशत् ।
दीर्घमायुर्मया प्राप्तं किं मे शक्रः करिष्यति ॥ ९

इत्येवं बुद्धिमास्थाय रणे शक्रमधर्षयम् ।
तस्य बाहुप्रमुक्तेन वज्रेण शतपर्वणा ॥ १०

सक्थिनी चैव मूर्धा च शरीरे संप्रवेशितम् ।
स मया याच्यमानः सन्नानयद्यमसादनम् ॥ ११

पितामहवचः सत्यं तदस्त्विति ममाब्रवीत् ।
अनाहारः कथं शक्तो भग्नसक्थिशिरोमुखः ॥ १२

वज्रेणाभिहतः कालं सुदीर्घमपि जीवितुम् ।
एवमुक्तस्तु मे शक्रो बाहू योजनमायतौ ॥ १३

प्रादादास्यं च मे कुक्षौ तीक्ष्णदंष्ट्रमकल्पयत् ।
सोऽहं भुजाभ्यां दीर्घाभ्यां संकृष्यास्मिन्वनेचरान् ॥ १४

सिंहद्विपमृगव्याघ्रान्भक्षयामि समन्ततः ।
स तु मामब्रवीदिन्द्रो यदा रामः सलक्ष्मणः ॥ १५

छेत्स्यते समरे बाहू तदा स्वर्गं गमिष्यसि ।
अनेन वपुषा राम वनेऽस्मिन्राजसत्तम ॥ १६

यद्यत्पश्यामि सर्वस्य ग्रहणं साधु रोचये ।
अवश्यं गृहणं रामो मन्येऽहं समुपैष्यति ॥ १७

इमां बुद्धिं पुरस्कृत्य देहन्यासकृतश्रमः ।
स त्वं रामोऽसि भद्रं ते नाहमन्येन राघव ॥ १८

शक्यो हन्तुं यथातत्त्वमेवमुक्तं महर्षिणा ।
अहं हि मतिसाचिव्यं करिष्यामि नरर्षभ ॥ १९

मित्रं चैवोपदेक्ष्यामि युवाभ्यां संस्कृतोऽग्निना ।
एवमुक्तस्तु धर्मात्मा दनुना तेन राघवः ॥ २०

इदं जगाद वचनं लक्ष्मणस्योपशृण्वतः ।
रावणेन हृता भार्या मम सीता यशस्विनी ॥ २१

निष्क्रान्तस्य जनस्थानात्सह भ्रात्रा यथासुखम् ।
नाममात्रं तु जानामि न रूपं तस्य रक्षसः ॥ २२

निवासं वा प्रभावं वा वयं तस्य न विद्महे ।
शोकार्तानामनाथानामेवं विपरिधावताम् ॥ २३

कारुण्यं सदृशं कर्तुमुपकारे च वर्तताम् ।
काष्ठान्यादाय शुष्काणि काले भग्नानि कुञ्जरैः ॥ २४

धक्ष्यामस्त्वां वयं वीर श्वभ्रे महति कल्पिते ।
स त्वं सीतां समाचक्ष्व येन वा यत्र वा हृता ॥ २५

कुरु कल्याणमत्यर्थं यदि जानासि तत्त्वतः ।
एवमुक्तस्तु रामेण वाक्यं दनुरनुत्तमम् ॥ २६

प्रोवाच कुशलो वक्तुं वक्तारमपि राघवम् ।
दिव्यमस्ति न मे ज्ञानं नाभिजानामि मैथिलीम् ॥ २७

यस्तां ज्ञास्यति तं वक्ष्ये दग्धः स्वं रूपमास्थितः ।
अदग्धस्य तु विज्ञातुं शक्तिरस्ति न मे प्रभो ॥ २८

राक्षसं तं महावीर्यं सीता येन हृता तव ।
विज्ञानं हि मम भ्रष्टं शापदोषेण राघव ॥ २९

स्वकृतेन मया प्राप्तं रूपं लोकविगर्हितम् ।
किं तु यावन्न यात्यस्तं सविता श्रान्तवाहनः ॥ ३०

तावन्मामवटे क्षिप्त्वा दह राम यथाविधि ।
दग्धस्त्वयाऽहमवटे न्यायेन रघुनन्दन ॥ ३१

वक्ष्यामि तमहं वीर यस्तं ज्ञास्यति राक्षसम् ।
तेन सख्यं च कर्तव्यं न्यायवृत्तेन राघव ॥ ३२

कल्पयिष्यति ते प्रीतः साहाय्यं लघुविक्रमः ।
न हि तस्यास्त्यविज्ञातं त्रिषु लोकेषु राघव ।
सर्वान्परिसृतो लोकान्पुरासौ कारणान्तरे ॥ ३३

इति एकसप्ततितमः सर्गः ॥

## द्विसप्ततितमः सर्गः ॥

एवमुक्तौ तु तौ वीरौ कबन्धेन नरेश्वरौ ।
कृतवन्तौ च महतीं चितां गिरिगुहोपमाम् ॥ १

ततः कबन्धमारोप्य चितां ज्वलिततेजसौ ।
बाहू च सुमहाबाहू योजनायतविस्तृतौ ॥ २

लक्ष्मणस्तु महोल्काभिर्ज्वलिताभिः समन्ततः ।
चितामादीपयामास सा प्रजज्वाल सर्वतः ॥ ३

तां प्रेक्ष्य सर्वतो दीप्तां चितां दृढधनुर्धरः ।
विस्मयान इदं वाक्यं राघवं लक्ष्मणोऽब्रवीत् ॥ ४

दग्धो जटायुः पूर्वं तु सीतामन्वेषता त्वया ।
अयं द्वितीयो निर्दग्धस्तृतीयं किनु वक्ष्यसि ॥ ५

महाभ्रशिखरप्रख्यं कबन्धमनलो महान् ।
अन्तरिक्षं महोल्काभिरावृणोत्स सहस्रशः ॥ ६

तच्छरीरं कबन्धस्य घृतपिण्डोपमं महत् ।
मेदसा पच्यमानस्य मन्दं दहति पावकः ॥ ७

स विधूय चितामाशु विधूमोऽग्निरिवोत्थितः ।
अरजे वाससी बिभ्रन्मालां दिव्यां महाबलः ॥ ८

ततश्चिताया वेगेन भास्वरो विमलाम्बरः ।
उत्पपाताशु संहृष्टः सर्वप्रत्यङ्गभूषणः ॥ ९

विमाने भास्वरे तिष्ठन्हंसयुक्ते यशस्करे ।
प्रभया च महातेजा दिशो दश विराजयन् ॥ १०

सोऽन्तरिक्षगतो रामं कबन्धो वाक्यमब्रवीत् ।
शृणु राघव तत्त्वेन यथा सीतामवाप्स्यसि ॥ ११

राम षड्युक्तयो लोके याभिः सर्वं विमृश्यते ।
परिमृष्टो दशान्तेन दशाभागेन सेव्यते ॥ १२

दशाभागगतो हीनस्त्वं हि राम सलक्ष्मणः ।
यत्कृते व्यसनं प्राप्तं त्वया दारप्रधर्षणम् ॥ १३

तदवश्यं त्वया कार्यः स सुहृत्सुहृदां वर ।
अकृत्वा हि न ते सिद्धिमहं पश्यामि चिन्तयन् ॥ १४

श्रूयतां राम वक्ष्यामि सुग्रीवो नाम वानरः ।
भ्रात्रा निरस्तः क्रुद्धेन वालिना शक्रसूनुना ॥ १५

ऋश्यमूके गिरिवरे पम्पापर्यन्तशोभिते ।
निवसत्यात्मवान्वीरश्चतुर्भिः सह वानरैः ॥ १६

वानरेन्द्रो महावीर्यस्तेजोवानमितप्रभः ।
सत्यसन्धो विनीतश्च धृतिमान्मतिमान्महान् ॥ १७

दक्षः प्रगल्भो द्युतिमान्महाबलपराक्रमः ।
भ्रात्रा निवासितो राम राज्यहेतोर्महाबलः ॥ १८

स ते सहायो मित्रं च सीतायाः परिमार्गणे ।
भविष्यति हि ते राम मा च शोके मनः कृथाः ॥ १९

भवितव्यं हि यच्चापि न तच्छक्यमिहान्यथा ।
कर्तुमिक्ष्वाकुशार्दूल कालो हि दुरतिक्रमः ॥ २०

गच्छ शीघ्रमितो राम सुग्रीवं तं महाबलम् ।
वयस्यं तं कुरु क्षिप्रमितो गत्वाद्य राघव ॥ २१

अद्रोहाय समागम्य दीप्यमाने विभावसौ ।
स च ते नावमन्तव्यः सुग्रीवो वानराधिपः ॥ २२

कृतज्ञः कामरूपी च सहायार्थी च वीर्यवान् ।
शक्तौ ह्यद्य युवां कर्तुं कार्यं तस्य चिकीर्षितम् ॥ २३

कृतार्थो वाकृतार्थो वा कृत्यं तव करिष्यति ।
स ऋक्षरजसः पुत्रः पम्पामटति शङ्कितः ॥ २४

भास्करस्यौरसः पुत्रो वालिना कृतकिल्बिषः ।
संनिधायायुधं क्षिप्रमृश्यमूकालयं कपिम् ॥ २५

कुरु राघव सत्येन वयस्यं वनचारिणम् ।
स हि स्थानानि सर्वाणि कार्त्स्न्येन कपिकुञ्जरः ॥ २६

नरमांसाशिनां लोके नैपुण्यादधिगच्छति ।
न तस्याविदितं लोके किञ्चिदस्ति हि राघव ॥ २७

यावत्सूर्यः प्रतपति सहस्रांशुररिन्दम ।
स नदीर्विपुलाञ्शैलान्गिरिदुर्गाणि कन्दरान् ॥ २८

अन्वीक्ष्य वानरैः सार्धं पत्नीं तेऽधिगमिष्यति ।
वानरांश्च महाकायान्प्रेषयिष्यति राघव ॥ २९

दिशो विचेतुं तां सीतां त्वद्वियोगेन शोचतीम् ।
स ज्ञास्यति वरारोहां निर्मलां रावणालये ॥ ३०

स मेरुशृङ्गाग्रगतामनिन्दितां
प्रविश्य पातालतलेऽपि वाऽऽश्रिताम् ।
प्लवङ्गमानां प्रवरस्तव प्रियां
निहत्य रक्षांसि पुनः प्रदास्यति ॥ ३१

इति द्विसप्ततितमः सर्गः ॥

## त्रिसप्ततितमः सर्गः ॥

निदर्शयित्वा रामाय सीतायाः प्रतिपादने ।
वाक्यमन्वर्थमर्थज्ञः कबन्धः पुनरब्रवीत् ॥ १

एष राम शिवः पन्था यत्रैते पुष्पिता द्रुमाः ।
प्रतीचीं दिशमाश्रित्य प्रकाशन्ते मनोरमाः ॥ २

जम्बूप्रियालपनसप्लक्षन्यग्रोधतिन्दुकाः ।
अश्वत्थाः कर्णिकाराश्च चूताश्चान्ये च पादपाः ॥ ३

धन्वना नागवृक्षाश्च तिलका नक्तमालकाः ।
नीलाशोकाः कदम्बाश्च करवीराश्च पुष्पिताः ॥ ४

अग्निमुख्या अशोकाश्च सुरक्ताः पारिभद्रकाः ।
तानारुह्याथ वा भूमौ पातयित्वा च तान्बलात् ॥ ५

फलान्यमृतकल्पानि भक्षयन्तौ गमिष्यथः ।
तदतिक्रम्य काकुत्स्थ वनं पुष्पितपादपम् ॥ ६

नन्दनप्रतिमं चान्यत्कुरवो ह्युत्तरा इव ।
सर्वकामफला वृक्षाः पादपास्तु मधुस्रवाः ॥ ७

सर्वे च ऋतवस्तत्र वने चैत्ररथे यथा ।
फलभारानतास्तत्र महाविटपधारिणः ॥ ८

शोभन्ते सर्वतस्तत्र मेघपर्वतसन्निभाः ।
तानारुह्याथ वा भूमौ पातयित्वा यथासुखम् ॥ ९

फलान्यमृतकल्पानि लक्ष्मणस्ते प्रदास्यति ।
चङ्क्रमन्तौ वरान्देशाञ्शैलाच्छैलं वनाद्वनम् ॥ १०

ततः पुष्करिणीं वीरौ पम्पां नाम गमिष्यथः ।
अशर्करामविभ्रंशां समतीर्थामशैवलाम् ॥ ११

राम सञ्जातवालूकां कमलोत्पलशालिनीम् ।
तत्र हंसाः प्लवाः क्रौञ्चाः कुररांश्चैव राघव ॥ १२

वल्गुस्वना निकूजन्ति पम्पासलिलगोचराः ।
नोद्विजन्ते नरान्दृष्ट्वा वधस्याकोविदाः शुभाः ॥ १३

घृतपिण्डोपमान्स्थूलांस्तान्द्विजान्भक्षयिष्यथः ।
रोहितान्वक्रतुण्डांश्च नलमीनांश्च राघव ॥ १४

पम्पायामिषुभिर्मत्स्यांस्तत्र राम वरान्हतान् ।
निस्त्वक्पक्षानयस्तप्तानकृशानेककण्टकान् ॥ १५

तव भक्त्या समायुक्तो लक्ष्मणः संप्रदास्यति ।
भृशं ते खादतो मत्स्यान्पम्पायाः पुष्पसञ्चये ॥ १६

पद्मगन्धि शिवं वारि सुखशीतमनामयम् ।
उद्धृत्य सितमक्लिष्टं रौप्यस्फाटिक सन्निभम् ॥ १७

अथ पुष्करपर्णेन लक्ष्मणः पाययिष्यति ।
स्थूलान्गिरिगुहाशय्यान्वराहान्वनचारिणः ॥ १८

अपां लोभादुपावृत्तान्वृषभानिव नर्दतः ।
रूपान्वितांश्च पम्पायां द्रक्ष्यसि त्वं नरोत्तम ॥ १९

सायाह्ने विचरन्राम विटपीन्माल्यधारिणः ।
शीतोदकं च पम्पाया दृष्ट्वा शोकं विहास्यसि ॥ २०

सुमनोभिश्चितांस्तत्र तिलकान्नक्तमालकान् ।
उत्पलानि च फुल्लानि पङ्कजानि च राघव ॥ २१

न तानि कश्चिन्माल्यानि तत्रारोपयिता नरः ।
न च वै म्लानतां यान्ति न च शीर्यन्ति राघव ॥ २२

मतङ्गशिष्यास्तत्रासन्नृषयः सुसमाहिताः ।
तेषां भाराभितप्तानां वन्यमाहरतां गुरोः ॥ २३

ये प्रपेतुर्महीं तूर्णं शरीरात्स्वेदबिन्दवः ।
तानि जातानि माल्यानि मुनीनां तपसा तदा ॥ २४

स्वेदबिन्दुसमुत्थानि न विनश्यन्ति राघव ।
तेषामद्यापि तत्रैव दृश्यते परिचारिणी ॥ २५

श्रमणी शबरी नाम काकुत्स्थ चिरजीविनी ।
त्वां तु धर्मे स्थिता नित्यं सर्वभूतनमस्कृतम् ॥ २६

दृष्ट्वा देवोपमं राम स्वर्गलोकं गमिष्यति ।
ततस्तद्राम पम्पायास्तीरमाश्रित्य पश्चिमम् ॥ २७

आश्रमस्थानमतुलं गुह्यं काकुत्स्थ पश्यसि ।
न तत्राक्रमितुं नागाः शक्नुवन्ति तमाश्रमम् ॥ २८

विविधास्तत्र वै नागाः वने तस्मिंश्च पर्वते ।
ऋषेस्तस्य मतङ्गस्य विधानात्तच्च काननम् ॥ २९

मतङ्गवनमित्येव विश्रुतं रघुनन्दन ।
तस्मिन्नन्दनसङ्काशे देवारण्योपमे वने ॥ ३०

नानाविहगसङ्कीर्णे रंस्यसे राम निर्वृतः ।
ऋश्यमूकस्तु पम्पायाः पुरस्तात्पुष्पितद्रुमः ॥ ३१

सुदुःखारोहणो नाम शिशुनागाभिरक्षितः ।
उदारो ब्रह्मणा चैव पूर्वकाले विनिर्मितः ॥ ३२

शयानः पुरुषो राम तस्य शैलस्य मूर्धनि ।
यत्स्वप्ने लभते वित्तं तत्प्रबुद्धोऽधिगच्छति ॥ ३३

न त्वेनं विषमाचारः पापकर्माऽधिरोहति ।
यस्तु तं विषमाचारः पापकर्माऽधिरोहति ॥ ३४

तत्रैव प्रहरन्त्येनं सुप्तमादाय राक्षसाः ।
तत्रापि शिशुनागानामाक्रन्दः श्रूयते महान् ॥ ३५

क्रीडतां राम पम्पायां मतङ्गारण्यवासिनाम् ।
सिक्ता रुधिरधाराभिः संहत्य परमद्विपाः ॥ ३

प्रचरन्ति पृथक्कीर्णा मेघवर्णास्तरस्विनः ।
ते तत्र पीत्वा पानीयं विमलं शीतमव्ययम् ॥ ३

निर्वृताः संविगाहन्ते वनानि वनगोचराः ।
ऋक्षांश्च द्वीपिनश्चैव नीलकोमलकप्रभान् ॥ ३

रुरूनपेतापजयान्दृष्ट्वा शोकं जहिष्यसि ।
राम तस्य तु शैलस्य महती शोभते गुहा ॥ ३

शिलापिधाना काकुत्स्थ दुःखं चास्याः प्रवेशनम् ।
तस्या गुहायाः प्राग्द्वारे महाञ्शीतोदको ह्रदः ॥ ४

फलमूलान्वितो रम्यो नानामृगसमावृतः ।
तस्यां वसति सुग्रीवश्चतुर्भिः सह वानरैः ॥ ४

कदाचिच्छिखरे तस्य पर्वतस्यावतिष्ठते ।
कबन्धस्त्वनुशास्यैवं तावुभौ रामलक्ष्मणौ ॥ ४

स्रग्वी भास्करवर्णाभः खे व्यरोचत वीर्यवान् ।
तं तु खस्थं महाभागं कबन्धं रामलक्ष्मणौ ॥ ४

प्रस्थितौ त्वं व्रजस्वेति वाक्यमूचतुरन्तिके ।
गम्यतां कार्यसिद्ध्यर्थमिति तावब्रवीत्स च ।
सुप्रीतौ तावनुज्ञाप्य कबन्धः प्रस्थितस्तदा ॥ ४४

स तत्कबन्धः प्रतिपद्य रूपं
वृतः श्रिया भास्करतुल्यदेहः ।
निदर्शयन्राममवेक्ष्य खस्थः
सख्यं कुरुष्वेति तदाभ्युवाच ॥ ४५

इति त्रिसप्ततितमः सर्गः ॥

## चतुःसप्ततितमः सर्गः ॥

तौ कबन्धेन तं मार्गं पम्पाया दर्शितं वने ।
प्रतस्थतुर्दिशं गृह्य प्रतीचीं नृवरात्मजौ ॥ १

तौ शैलेष्वाचितान्वृक्षान्क्षौद्रकल्पफलान्द्रुमान् ।
वीक्षन्तौ जग्मतुर्द्रष्टुं सुग्रीवं रामलक्ष्मणौ ॥ २

कृत्वा च शैलपृष्ठे तु तौ वासं रामलक्ष्मणौ ।
पम्पायाः पश्चिमं तीरं राघवावुपतस्थतुः ॥ ३

तौ पुष्करिण्याः पम्पायास्तीरमासाद्य पश्चिमम् ।
अपश्यतां ततस्तत्र शबर्या रम्यमाश्रमम् ॥

तौ तमाश्रममासाद्य द्रुमैर्बहुभिरावृतम् ।
सुरम्यमभिवीक्षन्तौ शबरीमभ्युपेयतुः ॥

तौ तु दृष्ट्वा तदा सिद्धा समुत्थाय कृताञ्जलिः ।
रामस्य पादौ जग्राह लक्ष्मणस्य च धीमतः ॥

पाद्यमाचमनीयं च सर्वं प्रादाद्यथाविधि ।
तामुवाच ततो रामः श्रमणीं शंसितव्रताम् ॥

कच्चित्ते निर्जिता विघ्नाः कच्चित्ते वर्धते तपः ।
कच्चित्ते नियतः क्रोध आहारश्च तपोधने ॥

कच्चित्ते नियमाः प्राप्ताः कच्चित्ते मनसः सुखम् ।
कच्चित्ते गुरुशुश्रूषा सफला चारुभाषिणी ॥

रामेण तापसी पृष्टा सा सिद्धा सिद्धसंमता ।
शशंस शबरी वृद्धा रामाय प्रत्युपस्थिता ॥

अद्य प्राप्ता तपःसिद्धिस्तव सन्दर्शनान्मया ।
अद्य मे सफलं तप्तं गुरवश्च सुपूजिताः ॥

अद्य मे सफलं जन्म स्वर्गश्चैव भविष्यति ।
त्वयि देववरे राम पूजिते पुरुषर्षभ ॥ १२

चक्षुषा तव सौम्येन पूताऽस्मि रघुनन्दन ।
गमिष्याम्यक्षयाँल्लोकांस्त्वत्प्रसादादरिन्दम ॥ १३

चित्रकूटं त्वयि प्राप्ते विमानैरतुलप्रभैः ।
इतस्ते दिवमारूढा यानहं पर्यचारिषम् ॥ १४

तैश्चाहमुक्ता धर्मज्ञैर्महाभागैर्महर्षिभिः ।
आगमिष्यति ते रामः सुपुण्यमिममाश्रमम् ॥ १५

स ते प्रतिग्रहीतव्यः सौमित्रिसहितोऽतिथिः ।
तं च दृष्ट्वा वराँल्लोकानक्षयांस्त्वं गमिष्यसि ॥ १६

मया तु विविधं वन्यं सञ्चितं पुरुषर्षभ ।
तवार्थे पुरुषव्याघ्र पम्पायास्तीरसंभवम् ॥ १७

एवमुक्तः स धर्मात्मा शबर्या शबरीमिदम् ।
राघवः प्राह विज्ञाने तां नित्यमबहिष्कृताम् ॥ १८

दनोः सकाशात्तत्त्वेन प्रभावं ते महात्मनः ।
श्रुतं प्रत्यक्षमिच्छामि सन्द्रष्टुं यदि मन्यसे ॥ १९

एतत्तु वचनं श्रुत्वा रामवक्त्राद्विनिःसृतम् ।
शबरी दर्शयामास तावुभौ तद्वनं महत् ॥ २

पश्य मेघघनप्रख्यं मृगपक्षिसमाकुलम् ।
मतङ्गवनमित्येव विश्रुतं रघुनन्दन ॥ २

इह ते भावितात्मानो गुरवो मे महामते ।
जुहवाञ्चक्रिरे तीर्थं मन्त्रवन्मन्त्रपूजितम् ॥ २

इयं प्रत्यक्स्थली वेदिर्यत्र ते मे सुसत्कृताः ।
पुष्पोपहारं कुर्वन्ति श्रमादुद्वेपिभिः करैः ॥ २

तेषां तपःप्रभावेण पश्याद्यापि रघूत्तम ।
द्योतयन्ति दिशः सर्वाः श्रिया वेद्योऽतुलप्रभाः ॥ २

अशक्नुवद्भिस्तैर्गन्तुमुपवासश्रमालसैः ।
चिन्तितेऽभ्यागतान्पश्य सहितान्सप्त सागरान् ॥ २

कृताभिषेकैस्तैर्न्यस्ता वल्कलाः पादपेष्विह ।
अद्यापि नावशुष्यन्ति प्रदेशे रघुनन्दन ॥ २

देवकार्याणि कुर्वद्भिर्यानीमानि कृतानि वै ।
पुष्पैः कुवलयैः सार्धं म्लानत्वं नोपयान्ति वै ॥ २

कृत्स्नं वनमिदं दृष्टं श्रोतव्यं च श्रुतं त्वया ।
तदिच्छाम्यभ्यनुज्ञाता त्यक्तुमेतत्कलेबरम् ॥ २८

तेषामिच्छाम्यहं गन्तुं समीपं भावितात्मनाम् ।
मुनीनामाश्रमो येषामहं च परिचारिणी ॥ २९

धर्मिष्ठं तु वचः श्रुत्वा राघवः सहलक्ष्मणः ।
प्रहर्षमतुलं लेभे आश्चर्यमिति तत्वतः ॥ ३०

तामुवाच ततो रामः श्रमणीं संशितव्रताम् ।
अर्चितोऽहं त्वया भक्त्या गच्छ कामं यथासुखम् ॥ ३१

इत्युक्ता जटिला वृद्धा चीरकृष्णाजिनाम्बरा ।
तस्मिन्मुहूर्ते शबरी देहं जीर्णं जिहासती ॥ ३२

अनुज्ञाता तु रामेण हुत्वाऽऽत्मानं हुताशने ।
ज्वलत्पावकसङ्काशा स्वर्गमेव जगाम सा ॥ ३३

दिव्याभरणसंयुक्ता दिव्यमाल्यानुलेपना ।
दिव्याम्बरधरा तत्र बभूव प्रियदर्शना ॥ ३४

विराजयन्ती तं देशं विद्युत्सौदामिनी यथा ।
प्रणम्य शिरसा रामं स्वर्गता सुप्रभानना ॥ ३५

यत्र ते सुकृतात्मानो विहरन्ति महर्षयः ।
तत्पुण्यं शबरी स्थानं जगामात्मसमाधिना ॥

इति चतुःसप्ततितमः सर्गः ॥

## पञ्चसप्ततितमः सर्गः ॥

---

दिवं तु तस्यां यातायां शबर्या स्वेन तेजसा ।
लक्ष्मणेन सह भ्रात्रा चिन्तयामास राघवः ॥

स चिन्तयित्वा धर्मात्मा प्रभावं तं महात्मनाम् ।
हितकारिणमेकाग्रं लक्ष्मणं राघवोऽब्रवीत् ॥

दृष्टोऽयमाश्रमः सौम्य बह्वाश्चर्यः कृतात्मनाम् ।
विश्वस्तमृगशार्दूलो नानाविहगसेवितः ॥

सप्तानां च समुद्राणामेषु तीर्थेषु लक्ष्मण ।
उपस्पृष्टं च विधिवत्पितरश्चापि तर्पिताः ॥

प्रणष्टमशुभं यत्तत्कल्याणं समुपस्थितम् ।
तेन तत्वेन हृष्टं मे मनो लक्ष्मण संप्रति ॥

हृदये हि नरव्याघ्र शुभमाविर्भविष्यति ।
तदागच्छ गमिष्यावः पम्पां तां प्रियदर्शनाम् ॥ ६

ऋश्यमूको गिरिर्यत्र नातिदूरे प्रकाशते ।
यस्मिन्वसति धर्मात्मा सुग्रीवोंऽशुमतः सुतः ॥ ७

नित्यं वालिभयात्त्रस्तश्चतुर्भिः सह वानरैः ।
अभित्वरे च तं द्रष्टुं सुग्रीवं वानरर्षभम् ॥ ८

तदधीनं हि मे सौम्य सीतायाः परिमार्गणम् ।
एवं ब्रुवाणं तं धीरं रामं सौमित्रिरब्रवीत् ॥ ९

गच्छावस्त्वरितं तत्र ममापि त्वरते मनः ।
आश्रमात्तु ततस्तस्मान्निष्क्रम्य स विशांपतिः ॥ १०

आजगाम ततः पम्पां लक्ष्मणेन सहाभिभूः ।
समीक्षमाणः पुष्पाढ्यं सर्वतो विपुलद्रुमम् ॥ ११

कोयष्टिकैश्चार्जुनकैः शतपत्रैश्च कीरकैः ।
एतैश्चान्यैश्च विविधैः नादितं तद्वनं महत् ॥ १२

स रामो विविधान्वृक्षान्सरांसि विविधानि च ।
पश्यन्कामाभिसन्तप्तो जगाम परमं ह्रदम् ॥ १३

सतामासाद्य वै रामो दूरादुदकवाहिनीम् ।
मतङ्गसरसं नाम ह्रदं समवगाहत ॥ १४

ततो जग्मतुरव्यग्रौ राघवौ हि समाहितौ ।
स तु शोकसमाविष्टो रामो दशरथात्मजः ॥ १५

विवेश नलिनीं पम्पां पङ्कजैश्च समावृताम् ।
तिलकाशोकपुन्नागवकुलोद्दालकाशिनीम् ॥ १६

रम्योपवनसंबाधां पद्मसंपीडितोदकाम् ।
स्फटिकोपमतोयाढ्यां श्लक्ष्णवालुकसन्तताम् ॥ १७

मत्स्यकच्छपसंबाधां तीरस्थद्रुमशोभिताम् ।
सखीभिरवयुक्ताभिर्लताभिरनुवेष्टिताम् ॥ १८

किन्नरोरगगन्धर्व यक्षराक्षससेविताम् ।
नानाद्रुमलताकीर्णां शीतवारिनिधिं शुभाम् ॥ १९

पद्मैः सौगन्धिकैस्ताम्रां शुक्लां कुमुदमण्डलैः ।
नीलां कुवलयैर्जातैर्बहुवर्णां कुथामिव ॥ २०

अरविन्दोत्पलवतीं पद्मसौगन्धिकायुताम् ।
पुष्पिताम्रवणोपेतां बर्हिणोद्घुष्टनादिताम् ॥ २१

सतां दृष्ट्वा ततः पम्पां रामः सौमित्रिणा सह ।
विललाप स तेजस्वी कामाद्दशरथात्मजः ॥ २२

तिलकैर्बीजपूरैश्च वटैः शुक्लद्रुमैस्तथा ।
पुष्पितैः करवीरैश्च पुन्नागैश्च सुपुष्पितैः ॥ २३

मालतीकुन्दगुल्मैश्च भाण्डीरैर्निचुलैस्तथा ।
अशोकैः सप्तपर्णैश्च केतकैरतिमुक्तकैः ।
अन्यैश्च विविधैर्वृक्षैः प्रमदामिव भूषिताम् ॥ २४

अस्यास्तीरे तु पूर्वोक्तः पर्वतो धातुमण्डितः ।
ऋश्यमूक इति ख्यातः पुण्यः पुष्पितकाननः ॥ २५

हरेर्ऋक्षरजोनाम्नः पुत्रस्तस्य महात्मनः ।
अध्यास्ते तं महावीर्यः सुग्रीव इति विश्रुतः ॥ २६

सुग्रीवमभिगच्छ त्वं वानरेन्द्रं नरर्षभ ।
इत्युवाच पुनर्वाक्यं लक्ष्मणं सत्यविक्रमम् ॥ २७

राज्यभ्रष्टेन दीनेन तस्यामासक्तचेतसा ।
कथं मया विना शक्यं सीतां लक्ष्मण जीवितुम् ॥ २८

इत्येवमुक्त्वा मदनाभिपीडितः
स लक्ष्मणं वाक्यमनन्यचेतसम् ।

विवेश पम्पां नलिनीं मनोहरां
रघूत्तमः शोकविषादयन्त्रितः ॥ २९

ततो महद्वर्त्म सुदूरसंक्रमः
क्रमेण गत्वा प्रविलोकयन्वनम् ।
ददर्श पम्पां शुभदर्शकानना-
मनेकनानाविधपक्षिसङ्कुलाम् ॥ ३०

इति पञ्चसप्ततितमः सर्गः ॥

---

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये
चतुर्विंशतिसहस्रिकायां संहितायाम्

अरण्यकाण्डः समाप्तः ॥

॥ श्रीः ॥

# ॥ श्रीमद्रामायणपारायणसमापनक्रमः ॥

## स्मार्तसंप्रदायः ।

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ १

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ २

अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः ।
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥ ३

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥ ४

शृण्वन् रामायणं भक्त्या यः पादं पदमेव वा ।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ७

यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ८

यन्मङ्गलं सुपर्णस्य विनताकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ९

अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥ १०

त्रीन्विक्रमान्प्रक्रमतो विष्णोरमिततेजसः ।
यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥ ११

ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते ।
मङ्गलानि महाबाहो दिशन्तु तव सर्वदा ॥ १२

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै
नारायणायेति समर्पयामि ॥ १३

---

## श्रीवैष्णवसंप्रदायः ।

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ।
प्रत्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषमिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ २

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ ३

कावेरी वर्धतां काले काले वर्षतु वासवः ।
श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् ॥ ४

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ ५

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ६

वेदवेदान्तवेद्याय मेघश्याममूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गलम् ॥ ७

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गलम् ॥ ८

पितृभक्ताय सततं भ्रातृभिः सह सीतया ।
नन्दिताखिललोकाय रामभद्राय मङ्गलम् ॥ ९

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गलम् ॥ १०

सौमित्रिणा च जानक्या चापबाणासिधारिणे ।
संसेव्याय सदा भक्त्या स्वामिने मम मङ्गलम् ॥ ११

दण्डकारण्यवासाय खण्डितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गलम् ॥ १२

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्वोद्रिक्ताय मङ्गलम् ॥ १३

हनुमत्समवेताय हरीशाभीष्टदायिने ।
वालीप्रमथनायास्तु महाधीराय मङ्गलम् ॥ १४

श्रीमते रघुवीराय सेतूलङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गलम् ॥ १५

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गलम् ॥ १६

मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १७

---

माध्वसंप्रदायः ।

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ १

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ २

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ ३

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ४

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै
नारायणायेति समर्पयामि ॥ ५